धर्म्याणि देवि सकलानि सदैव कर्मा
ण्यत्यादृतः प्रतिदिनं सुकृती करोति।
स्वर्गं प्रयाति च ततो भवतीप्रसादा–
ल्लोकत्रयेऽपि फलदा ननु देवि तेन ।।१६।।

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभांददासि।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽर्द्रचित्ता ।।१७।।

एभिर्हतैर्जगदुपैति सुखं तथैते
कुर्वन्तु नाम नरकाय चिराय पापम्।
संग्राममृत्युमधिगम्य दिवं प्रयान्तु
मत्वेति नूनमहितान्विनिहंसि देवि ।।१८।।

दृष्ट्वैव किं न भवती प्रकरोति भस्म
सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम्
लोकानप्रयान्तु रिपवोऽपिहि शस्त्रपूता
इत्थं मतिर्भवति तेष्वपि तेऽतिसाध्वी ।।१६।।

खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः
शूलाग्रकान्तिनिवहेन दृशोऽसुराणाम्।
यन्नागता विलयमंशुमन्दिुखण्ड–
योग्याननं तव विलोकयतां तदेतत् ।।२०।।

दुर्वृत्तवृत्तशमनं तव देवि शीलं
रूपं तथैतदविचिन्त्यमतुल्यमन्यैः।
वीर्यंच हन्तृहृतदेवपराक्रमाणां
वैरिष्विपि प्रकटितैव दया त्वयेत्थम् ।।२१।।

केनोपमा भवतु तेऽस्य पराक्रमस्य
रूपं च शत्रुभयकार्यतिहारि कुत्र ।

चित्ते कृपा समरनिष्ठुरता च दृष्टा
त्वय्येव देवि ! वरदे ! भुवनत्रयेऽपि ।।२२।।

त्रैलोक्यमेतदखिलं रिपुनाशनेन
त्रातं त्वया समरमूर्धनि तेऽपि हत्वा।
नीता दिवं रिपुगणा भयमप्यपास्तम–
स्माकमुन्मदसुरारिभवं नमस्ते ।।२३।।

शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ।२४।

प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ।।२५।।

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते।
यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ।।२६।।

खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके।
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ।।२७।।

ऋषिरुवाच ।।२८।।

एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नन्दनोदभवैः।
अर्चिता जगतां धात्री तथा गन्धानुलेपनैः ।।२९।।

भक्तया समस्तैस्त्रिदशैर्दिव्यैर्धूपैस्तु धूपिता।
प्राह प्रसादसुमुखी समसतान्प्रणतान् सुरान् ।।३०।।

देव्युवाच ।।३१।।

व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवाञ्छितम् ।।३२।।

देवा ऊचुः ।।३३।।

भगवत्या कृतं सर्वं न किञ्चिदवशिष्यते ।।३४।।
यदयं निहतः शत्रुरस्माकं महिषासुरः ।।३५।।

यदि चापि वरो देयस्त्वयास्माकं महेश्वरि
संस्मृता संस्मृता त्वं नो हिंसेथाः परमोपदः।

यश्च मर्त्यः स्तवैरेभिस त्वां स्तोष्यत्यमलानने ।।३६।।

तस्य वित्तर्द्धिविभवैर्धनदारादिसम्पदाम्।
वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ।।३७।।

ऋषिरुवाच ।।३८।।

इति प्रसादिता देवैर्जगतोऽर्थे तथाऽत्मनः।
तथेत्युक्त्वा भद्रकाली बभूवान्तर्हिता नृप ।।३६।।

इत्येतत्कथितं भूप सम्भूता सा यथा पुरा ।
देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ।।४०।।

पुनश्च गौरी देहात्सा समुद्भूता यथाभवत्।
वधाय दुष्टदैत्यानां तथा शुम्भनिशुम्भयोः ।।४१।।

रक्षणाय च लोकानां देवानामुपकारिणी।
तच्छृणुष्व मयाऽख्यातं यथावत्कथयामिते ॐह्रींॐ ।।४२।।

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये शक्रादिस्तुतिर्नाम चतुर्थोऽध्यायः ।।४।।

# एकादशोऽध्यायः

## देवताओं द्वारा देवी की स्तुति तथा देवी द्वारा देवताओं को वरदान

अथ ध्यानम्

ॐबालरविद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रयुक्ताम्
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम्।।

ॐ क्लीं ऋषिरुवाच ।।१।।

ॐ देव्या हते तत्र महासुरेन्द्रे
सेन्द्राः सुरा वह्निपुरोगमास्ताम्।
कात्यायनीं तुष्टुवुरिष्टलाभा–
द्विकासिवक्त्राब्ज विकासिताशाः।।२।।

देवि प्रपन्नार्तिहरे प्रसीद
प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वं
त्वमीश्वरी देवि चराचरस्य ।।३।।

आधारभूता जगतस्त्वमेका
महीस्वरूपेण यतः स्थितासि।
अपां सवरूपस्थितया त्वयैत–
दाप्यायते कृत्स्नमलङ्घ्यवीर्ये।।४।।

त्वं वैष्णवी शक्तिरनन्तवीर्या
विश्वस्य बीजं परमासि माया।
सम्मोहितं देवि समस्तमेतत्
त्वं वै प्रसन्ना भुवि मुक्तिहेतुः।।५।।

विद्या समस्तास्तव देवि भेदाः
स्त्रियः समस्ताः सकला जगत्सु।
तवयैकया पूरितमऽम्बयैतत्–
का ते स्तुतिः स्तव्यपरा परोक्तिः।।६।।

सर्वभूता यदा देवि स्वर्गमुक्तिप्रदायिनी।
त्वं स्तुता स्तुतये का वा भवन्तु परामोक्तयः।।७।।

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते।।८।।

कलाकाष्ठादिरूपेण परिणामप्रदायिनी।
विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते।।६।।

सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते।।१०।।

सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते।।११।।

शरणागत दीनार्तपरित्राणपरायणे।
सर्वस्यार्त्तिहरे देवि नारायणि नमोऽस्तु ते।।१२।।

हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि।
कौशाम्भःक्षरिके देवि नारायणि नमोऽस्तु ते।।१३।।

त्रिशूलचन्द्राहिधरे महावृषभवाहिनी।
माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते।।१४।।

मयूरकुक्कुटवृते महाशक्तिधरेऽनघे।
कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते।।१५।।

शङ्खचक्रगदाशाङ्र्गगृहीतपरमायुधे।
प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते।।१६।।

गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुन्धरे।
वराहरूपिणि शिवे नारायणि नमोऽस्तु ते।।१७।।

नृसिंहरूपेणोग्रेण हन्तुं दैत्यान् कृतोद्यमे।
त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते।।१८।।

किरीटिनि महावज्रे सहस्रनयनोज्ज्वले।
वृत्रप्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते।।१६।।

शिवदूतीस्वरूपेण हतदैत्यमहाबले।
घोररूपे महारावे नारायणि नमोऽस्तु ते।।२०।।

दंष्ट्राकरालवदने शिरोमालाविभूषणे।
चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते।।२१।।

लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टिस्वधे ध्रुवे।
महारात्रि महाविद्ये नारायणि नमोऽस्तु ते।।२२।।

मेधे सरस्वति वरे भूति वाभ्रवितामसि।
नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते।।२३।।

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते।।२४।।

एतत्तेवदनं सौम्यं लोचनत्रयऽभूषितम्।
पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते।।२५।।

ज्वालाकरालमत्युग्र मशेषासुर सूदनम्।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते।।२६।।

हिनस्ति दैत्यतेजांसि स्वनेनापूर्यया जगत्।
सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव।।२७।।

असुरासृग्वसापङ्क्चर्चितस्ते करोज्ज्वलः।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम्।।२८।।

रोगानशेषानपहंसि तुष्टा
रूष्टा तु कामान् सकलानभीष्टान्।
त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ।।२९।।

एतत्कृतं यत्कदनं त्वयाद्य
धर्मद्विषां देवि महासुराणाम्।
रूपैरनेकैर्बहुधाऽऽत्ममूर्तिं
कृत्वाम्बिके तत्प्रकरोति कान्या ।।३०।।

विद्यासु शास्त्रेषु विवेकदीपे–
ष्वाद्येषु वाक्येषु च का त्वदन्या।
ममत्वगर्तेऽतिमहान्धकोरे
बिभ्रामयत्येतदतीव विश्वम् ।।३१।।

रक्षांसि यत्रोग्रविषाश्च नागा
यत्रारयो दस्युबलानि यत्र।
दावानली यत्र तथाब्धिमध्ये
तत्र स्थिता त्वं परिपासि विश्वम्।।३२।।

विश्वेश्वरी त्वं परिपासि विश्वं
विश्वात्मिका धारयसीति विश्वम्।

विश्वेशवन्द्या भवति भवन्ति
विश्वाश्रया ये त्वयि भक्तिनम्राः ३३।।

देवि प्रसीद परिपालय नोऽरिभीते–
र्नित्यं यथासुरवधादधुनैव सद्यः ।
पापानि सर्वजगतां प्रशमं नयाशु
उत्पातपाकजनिताँश्च महोपसर्गान् ।।३४।।

प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ।३५।

देव्युवाच ।३६।

वरदाहं सुरगणा वरं यन्मनसेच्छथ।
तं वृणुध्वं प्रयच्छामिजगतामुपकारकम् ।३७।

देवा ऊचुः ।३८।

सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि।
एवमेव त्वयाकार्यमस्मद्वैरिविनाशनम् ।३९।

देव्युवाच ।४०।

वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे।
शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ ।४१।

नन्दगोपगृहे जाता यशोदागर्भसम्भवाः।
ततसतौ नाशयिष्यामि विन्ध्याचलनिवासिनी ।४२।

पुनरऽप्यतिरौद्रेण रूपेण पृथिवीतले।
अवतीर्य हनिष्यामि वैप्रचित्तांस्तु दानवान् ।४३।

भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान्महासुरान्।
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः ।४४।

ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ।४५।

भुयश्च शतवार्षिकयामऽनावृष्ट्यामऽनम्भसि।

मुनिभिः संस्तुता भूमौ सम्भविष्याम्य योनिजा ।४६।
ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्।
कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः ।४७।
ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः।
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः ।४८।
शाकम्भरीति विख्यातिं तदा यास्याम्यहं भुवि।
तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ।४९।
दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति।
पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले ।५०।
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात्।
तदा मां मुनयः सर्वे स्तोष्यन्त्याऽनम्रमूर्तयः ।५१।
भीमा देवीति विख्यातं तन्मे नाम भविष्यति।
यदारूणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ।५२।
तदाहं भ्रामरं रूपं कृत्वासंख्येयषट्पदम्।
त्रैलोक्यस्य हितार्थाय बधिष्यामि महासुरम् ।५३।
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः।
इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।५४।
तदा तदा वतीर्याहं करिष्याम्यरिसंक्षयम् ।ॐ। ।।५५।।

इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये देव्याः स्तुतिर्नामैकादशोऽध्यायः ।।११।।

# अनुग्रहे नवश्लोकाः

१. ॐ विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीं
करोतुसा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः।

२. ॐ स्तुतासुरैः पूर्वमऽभीष्ट संश्रयात्ततथा सुरेन्द्रेण दिनेषु सेविता । करोतु०

३. ॐ या साम्प्रतं चोद्धत दैत्यतापितैरऽस्माभि रीशा च सुरैर्नमस्यते । करोतु०

४. ॐ या च स्मृतातत्क्षणमेव हन्ति नः सर्वापदोभक्ति विनम्रमूर्तिभिः। करोतु०

५. ॐ सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि । करोतु०

६. ॐ सर्वमङ्गल मंगल्ये शिवेसर्वार्थ साधिके । करोतु०

७. ॐ सृष्टि स्थिति विनाशानां शक्ति भूतेसनातनि । करोतु०

८. ॐ शरणागतदीनार्त परित्राण परायणे । करोतु०

९. ॐ सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते।
करोतुसा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः।।

# क्षमा प्रार्थना

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ।।१।।
आवाहनं न जानामि नैवजानामि पूजन्म्।
विसर्जनम् न जानामि क्षम्यतां परमेश्वरि ।।२।।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ।।३।।

अपराधशतं कृत्वा जगदम्बेति चोच्चरेत्।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ।।४।।
सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके।
इदानीमनुकम्प्योऽहं यथेच्छसि तथा कुरू ।।५।।
अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्नयूनमधिकं कृतम्।
तत्सर्व क्षम्यतां देवि प्रसीद परमेश्वरि ।।६।।
कामेश्वरि जगन्मातः सच्चिदानन्दविग्रहे ।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ।।७।।
गुह्यातिगुह्यगाप्त्री त्वं गृहाणास्मस्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्सुरेश्वरि ।।८।।

श्री गणेशाय नमः ।।

# अथ श्री चण्डी कवचम् ।।

ॐ अस्य श्री चण्डी कवचस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः चामुण्डा देवता श्री जगदम्बा प्रीत्यर्थे सप्तशती पाठे विनियोगः ।।

***ॐ नमश्चण्डिकायै।। मार्कण्डेय उवाच ।।***

ॐ यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम्। यन्नकस्यचिदाख्यातं तन्मे ब्रूहि पितामह! ।।

***ब्रह्मोवाच।।***

अस्ति गुह्यतमं विप्र! सर्वभूतोपकारकम्।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने!।।१।।
प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ।।२।।

पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ।।३।।
नवमं सिद्धि दात्री च नव दुर्गाः प्रकीर्तिताः।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ।।४।।
अग्निना दह्य मानस्तु शत्रुमध्ये गतो रणे।
विषमे दुर्गमे चैव भयार्त्ताः शरणं गताः ।।५।।
न तेषां जायते किञ्चिदशुभं रणसंकटे।
नापदं तस्य पश्यामि शोकदुःखभयं न हि।।६।।
यैस्तुभक्त्या स्मृता नूनं तेषां वृद्धिः प्रजायते।
ये त्वां स्मरन्ति देवेशि! रक्षसे तान्न संशयः।।७।।
प्रेतसंस्था तु चामुण्डा वाराही महिषासना।
ऐन्द्री गजसमारूढा वैष्णवी गरूडासना।।८।।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ।
लक्ष्मीः पद्मासना देवी पदम्हस्ता हरिप्रिया।।९।।
श्वेतरूपधरादेवी ईश्वरी वृषवाहना।
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता।।१०।।
इत्येता मातरः सर्वाः सर्वयोगसमन्विताः।
नानाभरणशो भाढ्या नानारत्नोपशोभिताः।।११।।
दृश्यन्ते रथमा रूढा देव्यः क्रोधसमाकुलाः।
शङ्खं चक्रं गदा शक्तिं हलं च मुसलायुधम् ।।१२।।
खेटकं तोमरं चैव परशुं पाशमेव च।
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम्।।१३।।
दैत्यानां देहनाशाय भक्तानामभयाय च।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै।।१४।।
नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे।
महाबले महोत्साहे महाभय विनाशिनि ।।१५।।

त्राहि मां देवि दुष्प्रक्ष्ये शत्रूणां भयवर्द्धिनी।
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।।१६।।
दक्षिणेऽवतुवाराही नैर्ऋत्यां खड्गधारिणी।
प्रतीच्यां वारूणी रक्षेद्वायव्यां मृगवाहिनी ।।१७।।
उदीच्यां पातु कौमारी ईशान्यां शूलधारिणी।
ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा ।।१८।।
एवं दशदिशो रक्षेच्चामुण्डः शववाहना।
जया मे चाग्रतः पातु विजया पातु पृष्ठतः ।।१६।।
अजितावाम पार्श्वे तु दक्षिणे चापराजिता।
शिखामुद्योतिनी रक्षेदुमामूर्ध्नि व्यवस्थिता ।।२०।।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी।
त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासि के ।।२१।।
शङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वार वासिनी।
कपोलौ कालिका रक्षेत्कर्णमूले तु शाङ्करी।।२२।।
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका।
अधरेचामृतकला जिह्वायां च सरस्वती।।२३।।
दन्तान्रक्षतु कौमारी कण्ठदेशे तु चण्डिका।
घण्टिकां चित्रघण्टा च महा माया च तालुके।।२४।।
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमंगला।
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी।।२५।।
नीलग्रीवा बहिष्कण्ठे नलिकां नलकूबरी।
स्कन्धयोः खड्गिनी रक्षेद्बाहू मे वज्रधारिणी।।२६।।
हस्तयोर्दण्डिनी रक्षेदम्बिका चाङ्गुलीषु च।
नखाञ्छूलेश्वरी रक्षेत् कुक्षौ रक्षेत्कुलेश्वरी।।२७।।
स्तनौ रक्षेन्महादेवी मनः शोकविनाशिनी।
हृदयेललिता देवी उदरे शूलधारिणी।।२८।।

नाभौ च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा।
पूतना कामिका मेढ्रं गुदे महिषवाहिनी।।२६।।
कट्यां भगवती रक्षेज्जानुनी विन्ध्यवासिनी।
जङ्घे महाबला रक्षेतसर्वकामप्रदायिनी।।३०।।
गुल्फयोर्नारसिंही च पादपृष्ठे तु तैजसी।
पादङ्गुलीषु श्री रक्षेत्पादाधः स्थलवासिनी।।३१।।
नखान्दंष्ट्रा कराली च केशाँश्चैवोर्ध्वकेशिनी।
रोमकूपेषु कौमारी त्वचं वागीश्वरी तथा।।३२।।
रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती।
अन्त्राणि कालरात्रिश्च पित्तं च मुकुटेश्वरी।।३३।।
पद्मावती पद्मकोशे कफे चूडामणिस्तथा।
ज्वालामुखी नसाजालमभेद्या सर्वसन्धिषु।।३४।।
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेश्वरी तथा।
अहङ्कारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी।।३५।।
प्राणापानौ तथा व्यानमुदानञ्च समानकम्।
वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना।।३६।।
रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी।
सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा।।३७।।
आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी।
यशः कीर्तिं च लक्ष्मीं च धनं विद्यां च चक्रिणी।।३८।।
गोत्रमिन्द्राणि मे रक्षेत्पशून्मे रक्ष चण्डिके।
पुत्रान्रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी।।३६।।
पन्थानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा।
राजद्वारे महालक्ष्मीर्विजया सर्वतःस्थिता।।४०।।
रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु।
तत्सर्वं रक्ष मे देवि जयंती पापनाशिनी।।४१।।

पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः।
कवचेनावृतो नित्यं यत्र यत्रैव गच्छति।।
तत्र तत्रार्थलाभश्च विजयः सर्वकामिकः।
यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्।।
परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान्।
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः।
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान।।
इदं तु देव्याः कवचं देवानामपि दुर्लभम्।
यः पठेतप्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः।।
दैवीकला भवेत्तस्य त्रैलोक्येष्वपराजितः।
जीवेद्वर्ष शतं साग्रमपमृत्यु विवर्जितः।।
नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः।
स्थावरं जंगमं चैव कृत्रिमं चापि यद्विषम्।।
अभिचाराणि सर्वाणि मन्त्र यन्त्राणि भूतले।
भूचराः खेचराश्चैव कुलजाश्चोपदेशिकाः।।
सहजाः कुलजा माला डाकिनी शाकिनी तथा।
अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः।।
ग्रहभूत पिशाचाश्च यक्षगन्धर्वराक्षसाः।
ब्रह्मराक्षसवेतालाः कूष्माण्डा भैरवादयः।।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते।
मानोन्नतिर्भवेद्राज्यन्तेजोवृद्धि करं परम्।।
यशसा वर्द्धते सोऽपि कीर्तिमण्डित भूतले।
जपेत्सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा।।
यावद्भूमण्डलं धत्ते सशैलवनकाननम्।
तावत्तिष्टति मेदिन्यां सन्ततिः पुत्रपौत्रकी।।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम्।

प्राप्नोति पुरूषो नित्यं महामायाप्रसादतः ।।
लभते परमं रूपं शिवेन सह मोदते उों ।।

इति वाराहपुराणे हरिहरब्रह्मविरचितं देव्याः कवचं समाप्तम्।।

# अथ सरस्वती कवचम

**ब्रह्मोवाचः।।**

श्रृणु वत्स प्रवक्ष्यामि कवचं सर्व कामदम्।
श्रतिसारं श्रुतिसुखं श्रुत्युक्तं श्रुतिपूजितम् ।।१।।
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने।
रासेश्वरेण विभुना रासने रासमण्डले ।।२।।
अतीवगोपनीयं च कल्पवृक्षसमं परम्।
अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम् ।।३।।
यद्धृत्वा पठनाद्ब्रह्मन वुद्धिमाँश्च बृहस्पतिः।
यद्धृत्वा भगवाञ्छुक्रः सर्वदैत्येषु पूजितः ।।४।।
पठनाद्धारणाद्वाग्मी कवीन्द्रो वाल्मिको मुनिः।
स्वायम्भुवो मनुश्चैव यद्धृत्वा सर्वपूजितः।।५।।
कणादो गौतमः कण्वःपाणिनिःशाकटायनः।
ग्रंथं चकार यद्धृवा दक्षः कात्यायनः स्वयम्।।६।।
धृत्वा वेदविभागं च पुराणान्यखिलानि च।
चकार लीलामात्रेण कृष्णद्वैपायनः स्वयम्।।७।।
शातातपश्च संवर्त्तो वसिष्ठश्च पराशरः।
यद्धृत्वा पठनाद् ग्रन्थं याज्ञवल्क्यश्चकार सः।।८।।
ऋष्यश्रृङगो भारद्वाजश्चास्तीको देवलस्तथा ।
जैगीषव्योऽथ जाबालिर्यद्धृत्वा सर्वपूजितः ।।९।।

कवचस्यास्य विप्रेन्द्र ऋषिरेष प्रजापतिः।
स्वयं बृहस्पतिश्छन्दो देवो रासेश्वरः प्रभुः।।१०।।
सर्वतत्त्व परिज्ञानसर्वार्थसाधनेषु च।
कवितासु च सर्वासु विनियोगः प्रकीर्तितः।।११।।

ॐ ह्रीं सरस्वत्यै स्वाहा शिरो मे पातु सर्वतः।
ॐ श्रीं वाग्देवतायै स्वाहा भालं मे सर्वदावतु।।१२।।
ॐ सरस्वतयै स्वाहिति श्रोतं पातु निरन्तरम्।।
ॐ श्रीं ह्रीं भारत्यै सवाहा नेत्रयुग्मं सदावतु।।१३।।
ॐ ह्रीं वाग्वादिन्यै स्वाहा नासां मे सर्वतोऽवतु ।
ॐ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा ओष्ठं सदावतु।।१४।।
ॐ श्रीं ह्रीं ब्राह्म्यै स्वाहेति दन्तपङ्क्तीः सदावतु।
ॐ ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदावतु।।१५।।
ॐ श्रीं ह्रीं पातु मे ग्रीवां स्कन्धं मे श्री सदावतु।
ॐ श्रीं विद्याधिष्ठातृ देव्यै स्वाहा वक्षः सदावतु।।१६।।
ॐ ह्रीं विद्यास्वरूपायै स्वाहा मे पातु नाभिकाम्।
ॐ ह्रीं ह्रीं वाण्यै स्वाहेति मम पृष्ठं सदावतु।।१७।।
ॐ सर्ववर्णात्मिकायै पदयुग्मं सदावतु।
ॐ रागाधिष्ठातृदेव्यै सर्वाङ्गं मे सदावतु।।१८।।
ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदावतु।
ॐ ह्रीं जिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु।।१९।।
ॐ ऐं ह्रीं श्रींसरस्वत्यै बुधजनन्यै स्वाहा।
ॐ सततं मन्त्रराजोऽयं दक्षिणे मां सदावतु।।२०।।
ॐ ह्रीं श्रींत्र्यक्षरो मन्त्रो नैर्ऋत्यां मे सदावतु।
ॐ कविजिह्वाग्र वासिन्यै स्वाहा मां वारूणेऽवतु।।२१।।
ॐ सदाम्बिकायै स्वाहा वायव्य मां सदावतु।

ॐ गद्यपद्यवासिन्यै स्वाहा मामुत्तरेऽवतृ।।२२।।
ॐ सर्वशास्त्रवासिन्यै स्वाहेशान्यां सदावतु।
ॐ ह्रीं सर्वपूजितायै स्वाहा चोर्ध्वं सदावतु।।२३।।
ओं ऐं ह्रीं पुस्तकवासिन्यै स्वाहाधो मां सदावतु।
ॐ ग्रन्थबीजस्वरूपायैस्वाहा मां सर्वतोऽवतु।।२४।।

इति ते कथितं विप्र सर्वमन्त्रोघविग्रहम।
इंद विश्वजयं नाम कवचं ब्रह्मरूपिणम्।।
पुराश्रुतं धर्म वक्त्रात् पर्वते गन्धमादने।
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित्।।
गुरूमभ्यर्च्य विधिवद्वस्त्रालंकारचन्दनैः।
प्रणमेद्दण्डवद् भूमौ कवचं धारयेत्सुधीः।।
पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत्।
यदि स्यात् सिद्धकवचो बृहस्पतिसमो भवेत्।।
महा वाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत्।
शक्नोति सर्वं जेतुं स कवचस्य प्रसादतः।।
इति ते काण्वशाखोक्तं कथितं कवचं मुने।
स्तोत्रं पूजाविधानं च ध्यानं च वन्दनं तथा।।

केशव छित कोश मत दिसरावतम ईश्वर

इति श्रीब्रह्मवैवर्त्ते महापुराणे प्रकृतिखण्डे नारायणनारदसंवादे सरस्वतीकवचं नाम चतुर्थोऽध्यायः।।

राम नाम लंकायि डास करनावतम, शवन्य पावनम नेन्द्रे वेथ
कोम्ब करनस नेन्द्रे वुज़नावतम ईश्वर हावतमू पनानी गथ

छुम खसुन कोह, मत दोहलोसनावतम, खस खोर वस खोर ब्रोंह तय पथ
रस रस पनने वति पकनावतम, ईश्वर हावतमू पननी गथ

सर करन कि सर तन मन नावतम अरसर वास्तम तइमा वानि सथ
मर मर चालिहेम त गरि मत रावतम ईश्वर - -

कुहमायायि हुन्द मस मत चावतम सूहम शब्दस रछतम वरथ
वाथ ज़ुजिश पत ब्रोठ वुछनावतम ईश्वर - -

परमानन्द तार तार फोलनावतम बार नोलनावतम सहज़लि कथ
कुजरस डलमा त अश रटनावतम ईश्वर - - -

# अथ सप्तश्लोकी गीता

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन्देहं स याति परमां गतिम।।१।।

स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसंघाः ।।२।।

सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठितम् ।।३।।

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ।।४।।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्।।५।।

सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्व सर्वैरहमेव वेद्यो वेदान्तकृतवेद विदेव चाहम् ।।६।।

मन्मना भव मदभ्क्तो मंद्याजी मां नमस्कुरू।
मामेवैष्यसि युक्त्वैवमात्मां मत्परायणः।।७।।

इति श्रीकृष्णार्जुनसंवादे सप्तश्लोकीगीता समाप्ता।।

# अथ सप्तश्लोकी दुर्गा।

शिव उवाच।।

देंवि त्वं भक्तसुलभे सर्वकार्यविधायिनी।
कलौ हि कार्यसिद्ध्यर्थमुपायं ब्रूहि यत्नतः।

देव्युवाच।।

शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम्।
मया तवैव स्नेहेनाप्यम्बास्तुतिः प्रकाश्यते।

ॐ अस्य श्रीदुर्गासप्तशलोकीस्तोत्रमन्त्रस्य नारायण ऋृषिः अनुष्टुप् छन्दः श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः श्रीदुर्गाप्रीत्यर्थं सप्तश्लोकीदुर्गापाठे विनियोगः।।

ॐ ज्ञानिनामपि चेतांसि देवी भगवती हिसा।
बलादाकृष्य मोहाय महामाया प्रयच्छति ।।१।।

दुर्गे समृता हरसि भीतिमशेषजन्तोः
स्वस्थै स्मृता मतितमीव शुभां ददासि।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचिता ।।२।।

सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।।३।।

शरणागतदीनार्तपरित्राणपरायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ।।४।।

सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते।
भयभ्यस्त्रहि नो देवि दुर्गे देवि नमोऽस्तु ते ।।५।।

रोगानशेषानपहंसि तुष्टा रूष्टा तु कामान् सकलानभीष्टान्।
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ।।६।।

सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि।
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम ।।७।।

# अथ एकशलोकी रामायणं

आदौ राम तपोवनादि गमनं हत्वा मृगं कांचनं।
वैदेही हरणं जटायु मरणं सुग्रीव सम्भाषणम्।।
बाली निर्दलनं समुद्र तरणं लङ्कापुरी दाहनं।
पश्चात् रावण कुम्भकर्ण हननं चैतत्हि रामायणम।।

# अथ एकशलोकी भागवतम्

आदौ देवकी देव गर्भ जननं, गोपी ग्रहे वरधनं।
माया पूतनि जीव ताप हरनम, गोवरधनो धारनं।।
कंस छेदन! कुरुऽवादि हन्नम, कुंती सुता पालनं।
ऐतत् भागवतं पुराण कथितम, श्री कृष्ण लीला सुमरंत।।



# श्री महा मृत्युञ्जय मन्त्रः

ॐ नमो देवाय रूदाय शर्वाय च नमो नमः
इशानाय वृषाङ्काय! भीमाय च नमो नमः
महादेवाय गुपत्ाय! वासुदेवाय परायच
वासुदेवाय शान्ताय! तथो मां पतये नमः
कृत्वा तुषार लिगंस्य! पूजा भक्ति पुरा सरं
प्रार्थयेदञ्जलिं बद्धवा! मूर्ध्नि भक्ति समन्विते
ॐ प्रणतोऽस्मि महादेव प्रपन्नोऽस्मि सदाशिव
निवारय महा मृत्युं मृत्युञ्जय नमोऽस्तुते
गौरी पते! विरूपाक्ष! शरणागत वत्सल।। निवारय०।।
काल कूट धर शम्भो! काल काल कृपानिधो।। निवारय०।।
ऋग्युजसामरूपेश! त्रिलोचन सुरीत्तम।। निवारय०।।
अनन्त पूर्ण कल्याण! कल्याण गुणभाड़न।। निवारय०।।
चन्द्रशेखर! विश्वात्मत! करूणाकर शङकर।। निवारय०।।
सुरेश्वर! सुराराधय! शर्व! त्रिपुरनाशन।। निवारय०।।
पाशाङकुशधर श्रीमन! नमो डमरूभूषण।। निवारय०।।
भस्मोदभासित सर्वांग! हर निवृत्तकल्मष।। निवारय०।।
प्रदर्शय महा शूलिन्संसार भयनाशक।। निवारय०।।
भुजंगभूषण श्रीमन! वृषभध्वज विश्वपर।। निवारय०।।
प्रसीद गिरिजानाथ! करूणारसवऽरिधे।। निवारय०।।
अनाथनाथ देवेश! शर्णागतपत्सल ।। निवारय०।।
त्रशोलपाणि पापारे! भगर्ख्याशिवापसि ।। निवारय०।।
त्राहिमां त्राहिमां नाथ! तं् इव परमागति।। निवारय०।।
निवारय महा मृत्युं मृत्युञ्जय नमोऽस्तुते।।

Pentosee-D

ॐत्र्यम्बें यजामहे सुगन्धिं रयिपोषणम्
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।।३।।

# अथ श्री शिव महिम्नःस्तोत्रम्

**ओं नमः शिवाय**

आधीनामगधं दिव्यं व्याधीनां मूलकृन्तनं
उपद्रवाणां दलन महादेवमुपास्महे।१।

अहं पापी पाप क्षपण निपुणाः शंकर! भवान्
अहं भीतो भीताभयवितरणे ते व्यसनिता।
अहं दीनो दीनोद्धरण विधि सज्जस्त्वमितरन्
न जानेऽहं वक्तुं कुरू सकल शोच्ये मयि कृपाम् ।२।

जनस्त्वत्पादाब्जश्रवणमननध्याननिपुणः
स्वयं ते निस्तीर्णा न खलु करूणा तेषु करणा ।
भवे लीने दीने मयि मननहीने न करूणा
कथं नाथ ख्यातस्त्वमसि करूणासागर इति ।३।

**ॐ श्री पुष्पदन्त उवाच।।**

ओं महिम्नः पारंते परमविदुषो यद्यसदृशी
स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः परिमाणावधि
अथावाच्यः सर्वः स्वमतिपरिनामावधि गृणन्
ममाप्येष स्तोत्रे हर! निरपरवादः परिकरः।।१।।

अतीतः पन्थानं तव च महिमा वाङ्मनसयोर–
तद्व्यावृत्त्यायं चकितमभिधत्ते श्रुतिरपि।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदेत्त्ववर्वाचीने पतति न मनः कस्य न वचः ।।२।।

मधुस्फीता वाचः परमममृतं निर्मितवतस्–
तव ब्रह्मन् किं वागऽपि सुरगुरोर्विस्मयपदम् ।
ममत्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन्पुरमथन! बुद्धिर्व्यवसिता ।।३।।

तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत् ।
त्रयीवस्तु व्यस्तं तिसृषु गुणभिन्नासु तनुषु ।
अभव्यानामस्मिन्वरद! रमणीयामरमणीं
विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ।।४।।

किमीहः किंकायः स खुल किमुपायस्त्रिभुवनं
किमाधारो धाता सृजति किमुपादानमिति च ।
अतर्कैश्वर्य त्वय्यऽनवसुरदुःस्थो हतधियः
कुतर्कोयं कांश्चिन्मुखरयति मोहाय जगताम् ।।५।।

अजण्मानो लोकाः किमऽवयववन्तोऽपि जगता–
मधिष्ठातारं किं भवविधिरनादृत्य भवति ।
अनीशो वा कुर्यादभुवनजनने कः परिकरो परिकरं
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ।।६।।

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।।७।।

महोक्षः खट्वांगं परशुरजिनं भस्म फणिनः
कपालं चेतीयत्तव वरद तन्त्रोपकरणम् ।
सुरास्तां तामृद्धिं विदधतितु भवद्भ्रूप्रणिहितां
नहि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ।।८।।

ध्रुवं कश्चित् सर्वं सकलमपरस्तु ध्रुवमिदं
परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये ।

समस्तेऽप्येतस्मिन्पुरमथन! तैर्विस्मित इव
स्तुवञ्जिह्रेमित्वां न खलुननु धृष्टा मुखरता।।९।।

तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चो हरिरधः
परिच्छेत्तुं यातावनलमनलस्कन्दवपुषः।
ततो भक्ति श्रद्धाभरगुरू गृणद्भ्यां गिरिश! यत्
स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति।।१०।।

अयत्नादासाद्य त्रिभुवनमवैरिव्यतिकरं
दशास्यो यद्बाहूनभृत रणकण्डूपरवशान्।
शिरःपद्मश्रेणीरचितचरणाम्भोरूहबलेः
स्थिरायास्त्वद्भक्तेस्त्रिपुरहर! विस्फूर्जितमिदम्।।११।।

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं
बलात्कैलासेपि त्वदधिवसितौ विक्रमयतः।
अलभ्या पातालेऽप्यलसचलितांगुष्ठशिरसि
प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः।।१२।।

यदृद्धिं सुत्राम्णो वरद! परमोच्चैरपिसतीम्–
धश्चक्रे बाणः परिजनविधेयत्रिभुवनः।
न तच्चित्रं तस्मिन्वरिवसितरि तवच्चरणयो–
र्नकस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः।।१३।।

अकाण्ड ब्रह्माण्डक्षयचकितदेवासुरकृपा
विधेयस्यासीद्यस्त्रिनयन! विषं संहृतवतः।
स कल्माषः कण्ठे तव न कुरूते न श्रियमहो
विकारोपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः।।१४।।

असिद्धार्था नैव ककचिदपि सदेवासुरनरे
निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः।
स पश्यन्नीश ! त्वामितरसुरसाधारणमभूत्
स्मरः समर्तव्यात्मा नहि वशिषु पथ्यः परिभवः ।।१५।।

महीपादाघाताद्व्रजति सहसा संशयपदं
पदं विष्णोर्भ्राम्यद्भुजपरिघरूग्णग्रहगणम्।
मुहुर्द्यौर्दौस्थ्यं यात्यऽनिभृजटाताडिततटा
जगद्रक्षायै त्वं नटसि ननु वामैव विभुता।।१६।।

वियद्व्यापी तारागणगुणितफेनोद्गमरूचिः
प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते।
जगद्द्वीपाकारं जलधिवलयं तेन कृतमि–
त्यनेनैवोन्नेयं धृत्तमहिम ! दिव्यं तव वपुः।।१७।।

रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो–
रथाङ्गे चन्द्राकौं रथचरणपाणिः शर इति।
दिधक्षोरस्ते कोयं त्रिपुरतृणमाडम्बरविधि–
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः।।१८।।

हरिस्ते साहस्रं कमल बलिमाधाय पदयो–
र्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम्।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा–
स्त्रयाणांरक्षायै त्रिपुरहर जागर्ति जगताम्।।१६।।

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्वकर्म प्रध्वस्तं फलति पुरूषाराधनमृते।
अतस्त्वां उत्प्रेक्ष्य क्रतुषु फलदान प्रतिभुवं
श्रुतो श्रद्धां बद्धवा दृढपरिकरः कर्मसु जनः।।२०।।

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृता–
मृषीणामार्त्विज्यं शरणद्! सदस्याः सुरगणाः।
क्रतुभ्रंशस्त्वत्तः क्रतुफलविधानव्यसनिनो
ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः।।२१।।

प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं
गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा।

धनुष्पाणेर्यातं दविमऽपि सपत्राकृतमुमं
त्रसन्तं तेऽद्यापि त्यजति न भृगव्याधरभसः।।२२।।

अपूर्वं लावण्यं विवसनतनोस्ते विमृशतां
मुनीनां दाराणां समजनि स कोपव्यतिकरः। कोऽप्यव्यतिकरः
यतोभग्ने गुह्ये सकृदऽपि सपर्यां विदधतां
ध्रुवं मोक्षोऽश्लीलं किमऽपि पुरूषार्थं प्रसवि ते।।२३।।
मोक्षं लीलां

स्वलावण्याशंसा धृतधनुषमह्नाय तृणवत्–
पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि।
यदि स्त्रैणं देवी यमनिरत देहार्धघटना–
दवैति त्वामद्धावत वरद मुग्धा युवतयः ।।२४।।

श्मशानेष्वाक्रीड़ा स्मरहर पिशाचाः सहचरा–
श्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः।
अमङ्गल्यं शीलं तव भवतु नामैवमखिलं
तथापि स्मर्तॄणां वरद परमं मङ्गलमसि।।२५।।

मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः
प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्ग्चितदृशः। ज
यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये
दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान्।।२६।।

त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह–
स्त्वमापस्त्वं व्योम त्वमुधरणिरात्मा त्वमिति च।
परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरं
न विद्मस्ततत्तत्त्वं वयमिह तु यत्त्वं न भवसि।।२७।।

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान–
काराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति।
तुरीयं ते धाम ध्वनिभिरवरून्धानमणुभिः
समस्तव्यस्तं त्वां शरणद् गृणात्योमिति पदम्।।२८।।

भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहां–
स्तथा भीमेशानाविति यदभिधानाष्टकमिदम्।
अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि
प्रियायास्मै धाम्ने प्रणिहितनमस्योस्मि भवते।।२६।।

वपुष्प्रादुर्भावादऽनुमितमिदं जन्मनि पुरा
पुरारे! नैवाहं क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः सम्प्रत्यतनुरऽहमऽग्रेप्यनतिमान्
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि।।३०।।

नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो
नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः।
नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो
नमः सर्वस्मै ते तदिदमिति सर्वाय च नमः।।३१।।

बहलरजसे विश्वोत्पत्तौ भवाय नमो नमः।
प्रबलतमसे तत्संहारे हराय नमो नमः।।
जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः।
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः।।३२।।

कृशपरिणति चेतः क्लेशवश्यं क्वचेदं
क्वच तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः।
इति चकितमऽमन्दीकृत्य मां भक्तिराऽधा–
द्वरद चरणयोस्ते वाक्यपुष्पोपहारम्।।३३।।

सुरभुजगनरेन्द्रैरर्चितस्येन्दुमौलेः
प्रथितगुणगरिम्णो ज्ञानकारुण्यमूर्तेः।
सकलगुणवरेण्यः पुष्पदन्ताऽभिधानो
व्यदधदऽलघुवृत्तैः स्तोत्रमेतद्वरीयः।।३४।।

असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे
सुरतरुवरशाखा खेलनी पत्रमुर्वी।

लिखति यदि गृहीत्वा शारदा सर्वकालं
तदपि तव गुणानामीश! पारं न याति ।।३५।।

असुरसुरमुनीद्रैरर्चितस्येन्दुमौलेः
प्रथितगुणमहिमनो ज्ञानकारूण्यमूर्ते
सकलगुणवरिष्ठः सकलगुणवरेण्यः पुष्पदन्ताभिधानो
रूचिरमलघुवृत्तैः स्तोत्रमेतत् चकार।।३६।।

अहरनवद्यं धूर्जटेः स्तोत्रमेतत्–
पठति परमभक्त्या शुद्धचितः पुमान्यः।
स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र
प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च।।३७।।

दीक्षा दानं तपस्तीर्थस्नानं योगादिकाः क्रियाः।
महिमन्स्तव पाठस्य कलां नार्हन्ति षोडशीम्।।
महेशान्नापरो देवो महिम्नो नापरा स्तुतिः।
अघोरान्नापरो मन्त्रोः नास्ति तत्त्वं गुरोः परम्।।३८।।

कुसुमदशननामा सर्वगन्धर्वराजः
शिशुधरवरमौलेर्देवदेवस्य दासः।
स गुरुनिजमहिम्नो भ्रष्ट एवास्य रोषात्–
स्तवनमिदमकार्षीद्धिव्यदिव्यं महिम्नः।।३६।।

सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं
पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः।।
व्रजति शिवसमीपं किन्नरैः स्तूयमानः
स्तवनमिदममोघं पुष्पदन्तप्रणीतम।।४०।।

श्रीपुष्पदन्त मुखपङ्कजनिर्गतेन
स्तोत्रेण किल्विषहरेण हरप्रियेण।
कण्ठस्थितेन पठितेन समाहितेन
सुप्रीणितो भवति भूतपतिर्महेशः।।४१।।

इत्येषा वाङ्मयी पूजा श्रीमच्छङ्करपादयोः अर्पिता तेन मे देवः प्रीयतां च सदाशिवः

# बहुरूपगर्भस्तोत्रम्।

ॐ नमः स्वच्छन्दभैरवाय

ॐ ब्रह्मादिकारणातीतं स्वशक्तयानन्दनिर्भरम्।
नमामि परमेशांन स्वच्छन्दं वीरनायकम्।।१।।
कैलासशिखरासीनं देवदेवं जगद्गुरूम्।
पप्रच्छ प्रणता देवी भैरवं विगतामयम्।।२।।

"श्रीदेव्युवाच"

प्रायश्चित्तेषु सर्वेषु समयोल्लङ्घनेषु च।
महाभयेषु घोरेषु तीव्रोपद्रवभूमिषु।।३।।
च्छिद्रस्थानेषु सर्वेषु सदुपायं वद प्रभो।
येनायासेन रहितो निर्दोषश्च भवेन्नरः ।।४।।

"श्रीभैरवः"

श्रृणु देवि परं गुह्यं रहस्यं परमादभुतम्।
सर्वपापप्रशमनं सर्वदुःखनिवारणम् ।।५।।
प्रायश्चित्तेषु सर्वषु तीव्रेष्वऽपि विमोचनम्।
सर्वच्छिद्रापहरणं सर्वार्तिविनिवारकम् ।।६।।
समयोल्लङ्घने घोरे जपादेव विमोचनम्।
भोगमोक्षप्रदं देवि सर्वसिद्धिफलप्रदम ।।७।।
शतजाप्येन शुद्धयंति महापातकिनोऽपि ये।
तदऽर्धं पातकं हन्ति तत्पादेनोपपातकम् ।।८।।
कायिकं वाचिकं चैव मानसं स्पर्शदोषजम्।
प्रमादादिच्छया वाऽपि सकृज्जाप्येन शुद्धयति ।।६।।
यागारम्भे च यागान्ते पठितव्यं प्रयतन्तः।

नित्ये नैमित्तिके काम्ये परस्याप्याऽत्मनोऽपि वा ।।१०।।
निश्छिद्रकरणं प्रोक्तं स्वभावपरिपूरणम्।
द्रव्यहीने मन्त्रहीने यज्ञयोगविवर्जिते ।।११।।
भक्तिश्रद्धाविरहिते शुद्धिशून्ये विशेषतः।
मनोविक्षेपदोषे च विलोपे पशुवीक्षिते ।।१२।।
विधिहीने प्रमादे च जप्तव्यं सर्वकर्मसु।
नाऽतः परतरो मन्त्रो नातः परतरा स्तुतिः ।।१३।।
नातः परतरा काचित्सम्यक्प्रत्यङ्गिरा प्रिये।
इयं समयविद्यानां राजराजेश्वरीश्वरी ।।१४।।
परमाऽप्यायनं देवि भैरवस्य प्रकीर्तितम्।
प्रीणनं सर्वदेवानां सर्वसौभाग्यवर्धनम् ।।१५।।
स्तवराजमिमं पुण्यं श्रृण्वष्वाऽवहिता प्रिये ।।१६।।

"अस्य श्रीबहुरूपभट्टारकसतोत्रस्य श्रीवामदेव ऋषिः अनुष्टुप्छन्दः श्रीबहुरूपभट्टारको देवता आतमनो वाङ्मनः कायो पार्जितपापनिवारणार्थं चतुर्वर्गसिद्ध्यर्थे पाठे विनियोगः।।

न्यासं कृत्वा प्राणायामः।।

ध्यानम्

वामे खेटकपाशशार्ङ्गविलसद्दण्डं च वीणाण्टिके
विभ्राणं ध्वजमुदग्रौ स्वनिभदे व्यंकं कुठारं करे।।
दक्षेस्यऽङ्कुशकन्दलेषुडमरून्वज्र त्रिशूलाभयान्–
रुद्रस्थं शरवक्त्रमिन्दुधवलं स्वच्छन्दनाथं स्तुमः।।

"मूलं।

ॐ बहुरूपाय विदम्हे कोटराक्षाय धीमहि। तन्नोऽघोरः प्रचोदयात्ॐ।।३।।
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च।
सर्वथा शर्व सर्वेभ्यो नमस्ते रूद्ररूपेभ्यः १०८, ।।

ॐ श्रीभैरवः ।।

ॐ नमः परमाकाशशायिने परमात्मने।
शिवाय परसंशान्तनिरानन्दपदाय ते ।।१।।
अवाच्यायाऽप्रमेयाय प्रमात्रे विश्वहेतवे।
महासामान्यरूपाय सत्तामात्रैकरूपिणे ।।२।।
घोषादिदशधाशब्दबीजभूताय शम्भवे।
नमः शान्तोग्रधोरादिमंत्रसन्दर्भगर्भिणे ।।३।।
रेवतीसंगविस्रम्भसमाश्लेषविला सिने।
नमः समरसास्वादपरानन्दोपभोगिने ।।४।।
भोगपाणे नमस्तुभ्यं योगीशैः पूजितात्मने।
द्वयनिर्दलनोद्योगसमुल्लासितमूर्तये ।।५।।
सरत्प्रसरविक्षोभविसृष्टाऽखिलजन्तवे।
नमो मायास्वरूपाय स्थाणवे परमेष्ठिने ।।६।।
घोरसंसारसंभोगदायिने स्थितिकारिणे।।
कालादिक्षितिपर्यनतपालिने विभवे नमः ।।७।।
रेहनाय महामोहध्वान्तविध्वंसहेतवे।
हृदयाम्भोजसंकोचभेदिने शिवभानवे ।।८।।
भोगमोक्षफलप्राप्तिहेतुर्योगविधायिने।
नमः परमनिर्वाणदायिने चन्द्रमौलये ।।६।।
घोष्याय सर्वमन्त्राणां सर्ववाङ्भ्यमूर्तये।
नमः शर्वाय सर्वाय सर्वपाशापहारिणे।।१०।।
रवणाय रवान्ताय नमस्ते रावराविणे।
नित्याय सुप्रबुद्धाय सर्वान्तरतमाय ते।।११।।
धौषाय परनादान्तश्चराय खचराय ते।
नमो वाक्पतये तुभ्यं भवाय भवभेदिने।।१२।।

रमणाय रतीशांगदाहिने चित्रकर्मिणे।
नमः शैलसुताभर्त्रे विश्वकर्त्रे महात्मने।।१३।।

नमः पारप्रतिष्ठाय सर्वान्तपदगाय ते।
नमः समस्ततत्वाध्वव्यापिने चित्स्वरूपिणे।।१४।।

रेवद्व्राय रूद्राय नमस्ते रूपरूपिणे।
परापरपरिस्पन्दमन्दिराय नमो नमः ।।१५।।

भरिताखिलविश्वाय योगगम्याय योगिने।
नमः सर्वेश्वरेशाय महाहंसाय शम्भवे।।१६।।

चर्च्याय चर्चनीयाय चर्चकाय चराय ते।
रवीन्दुसन्धिसंस्थाय महाचक्रेश ते नमः।।१७।।

सर्वानुस्यूतरूपाय सर्वाच्छादकशक्तये।
सर्वभक्षाय सर्वाय नमस्ते सर्ववेदिने ।।१८।।

रम्याय वल्लभाक्रान्तदेहार्धाय विनोदिने।
नमः प्रपन्नदुष्प्राप्यसौभाग्यफलदायिने ।।१९।।

तनमहेशाय तत्त्वार्थवेदिने भववेदिने।
महाभैरवनाथाय भक्तिगम्याय ते नमः ।।२०।।

शक्तिगर्भप्रबोधाय शरण्यायाऽशरीरिणे।
शान्तिपुष्ट्यादिसाध्यार्थसाधकाय नमोऽस्तु ते ।।२१।।

रवत्कुण्डलिनीगर्भप्रबोधप्राप्तशक्तये।
उत्स्फोटनापटुप्रौढपरमाक्षर मूर्तये ।।२२।।

समस्तव्यसतसंग्रस्तरश्मिजालोदरात्मने।
नमस्तुभ्यं महामीनरूपिणे विश्वगर्भिणे ।।२३।।

रेवारणिसमुदभूतवहिन्ज्वालावभासिने।
धनीभूतविकल्पात्मविश्वबन्धविभेदिने।।२४।।

भोगिनीस्यन्दनारूढिप्रौढिमालब्धगर्विणे।
नमस्ते सर्वभक्ष्याय परमामृतलाभिने ।।२५।।

णफकोटिसमावेशभरिताखिलसृष्टये।
नमः शक्तिशरीराय कोटिद्वितयसंगिने ।।२६।।

महामोहमलाक्रान्तजीववर्गप्रबोधिने।
महेश्वराय जगतां नमः कारणबन्धवे ।।२७।।

स्तेनोन्मूलनदक्षैकसमृतये विश्वमूर्तये ।
नमस्तेऽस्तु महादेवनाम्ने परस्वधात्मने ।।२८।।

रूग्द्राविणे महावीर्यरूरूवंशविनाशिने।
रूद्राय द्रावितशेषबन्धनाय नमोनमः।।२९।।

द्रवत्पररसास्वादचर्वणोद्युक्तशक्तये।
नमस्त्रिदशपूज्याय सर्वकारणहेतवे ।।३०।।

रूपातीत नमस्तुभ्यं नमस्ते बहुरूपिणे।
त्र्यम्बकाय त्रिधामान्तश्चारिणे च त्रिचक्षुषे।।३१।।

पेशलोपायलभ्याय भ्रान्तिभाजां महात्मने।
दुर्लभाय मलाक्रान्तचेतसां तु नमोनमः ।।३२।।

भवप्रदाय दुष्टानां भवाय भवभेदिने।
भव्यानां तन्मयानां तु सर्वदाय नमोनमः ।।३३।।

अणूनां मुक्तये घोरघोरसंसारदायिने।
घोरातिघोरमूढानां तिरस्कर्त्रे नमोनमः ।।३४।।

इत्येवं स्तोत्रराजेशं महाभैरवभाषितम्।
योगिनीनां परं सारं न दद्याद्यस्य कस्यचित।।
अदीक्षिते शठे क्रूरे निःसत्ये शुचिवर्जिते।
नास्तिके च खले मूर्खे प्रमत्ते विप्लुतेऽलसे।।
गुरूशास्त्रसदाचारदूषके कलहप्रिये।
निन्दके चुम्भके क्षुद्रेऽसमयज्ञे च दाम्भिके।।
दाक्षिण्यरहिते पापे धर्महीन च गर्विते।
भक्तियुक्ते प्रदातव्यं न देयं परदीक्षिते।।

पशूनां सन्निधौ देवि नोच्चार्यं सर्वथा क्वचित्।
अस्यैव स्मृतमात्रस्य विघ्ना नश्यन्ति सर्वशः।।
गुह्यका यातुधानाश्च वेताला राक्षसादयः।
डाकिन्यश्च पिशाचाश्च क्रुरसत्वाश्च पूतनाः।।
नश्यन्ति सर्वे पठितस्तोत्रसयास्य प्रभावतः।
खेचरी भूचरी चैव डाकिनी शाकिनी तथा।।
ये चान्ये बहुधा भूता दुष्टसत्त्वा भयानकाः।
व्याधिदौर्भिक्षदौर्भाग्यमारीमोहविषादयः ।।
गजव्याघ्रादयो भीताः पलायन्ते दिशो दश।
सर्वे दुष्टाः प्रणश्यन्ति चेत्याज्ञा पारमेश्वरी।।

इति श्रीललितस्वच्छन्दे बहुरूपगर्भस्तोत्रराजः सम्पूर्णः।।

# अथ साम्बसदाशिवकवचस्तोत्रम्।।

अस्य श्री साम्बसदाशिवकवचराजस्य, ऋषभयोगीश्वर ऋषिः, अनुष्टुपच्छन्दः श्रीसाम्बसदाशिवो देवता, ॐबीजं, नमः शक्तिः, शिवयेति कीलकं, श्रीसाम्बसदाशिवप्रीत्यर्थे शिवकवचस्तोत्र पाठे विनियोगः।।

अथ करन्यासः।

ॐ अङ्गुष्ठाभ्यां नमः, न तर्जनीभ्यां नमः, मः मध्यमाभ्यां नमः, शि अनामिकाभ्यां नमः, वा कनिष्ठाकाभ्यां नमः, य करतलकरपृष्ठाभ्यां नमः।।

अथ षडङ्गन्यासः।

ॐ हृदयाय नमः, न शिरसे स्वाहा, मः शिखायै वषट्, शि कवचाय हुँ, वा नेत्राभ्यां वौषट्, य अस्त्राय फट्।

प्राणायामः ।।

ध्यानं ।।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहंर पञ्चवकत्रं त्रिनेत्रम्।।

"तत्पुरुषाय विद्महे, महादेवाय धीमहि, तन्नो रुद्रः प्रचोदयात्" ।।३।।

ऋषभ योगेश्वरो उवाच।।

नमस्कृत्य महादेवं विश्वव्यापिनमीश्वरम्।
वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम्।।१।।
शुचौ देशे समासीनो यथावत्कल्पितासनः।
जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम्।।२।।
हृत्पुण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोवकाशम्।
अतीन्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम्।।३।।
ध्यानावधूताखिलकर्मबन्धश्चिरं चिदानन्दनिमग्नचेताः।
षडक्षरन्याससमाहितात्मा शैवेन कुर्यात्कवचेन रक्षाम्।।४।।
मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे।
यन्नाम दिव्यं वरमन्त्रमूलं धुनोतु मे सर्वमघं हृदिस्थम्।।५।।
सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मयानन्दघनश्चिदात्मा।
अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादऽशेषात्।।६।।
यो भूस्वरुपेण बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः।
योऽपां स्वरूपेण नृणां करोति सञ्जीवनं सोऽवतु मां जलेभ्यः।।७।।
कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः।
स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेर्निखिलाच्च तापत्।।८।।

यो वायुरूपेण चलत्वमाप प्राणादिभिः सोऽवतु मां दृढाय।
सव्योमरूपो निखिलावकाशो ह्याकाशरूपेण करोतु रक्षाम्।।६।।
यः कालकृत्कालभयाच्च सोऽव्यात् दिवाकरत्वेन जगन्त्रये माम्।
निशाकरत्वेन वनस्पतीशो यो मनः सोऽवतु निश्चलाय।।१०।।
योवेद नाम व्यवहारभोक्ता जीवस्वरूपेण हृषीकसाक्षी।
स पातु सत्कर्मफलप्रदो मां मखाग्र्यविध्वं सकयज्वमूर्तिः।।११।।
प्रीदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः।
चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्त्रम्।।१२।।
कुठारवेदाङ्कुशपाशशूलकपालढक्काक्षगुणान्ददानः।
चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादऽघोरो दिशि दक्षिणस्याम्।।१३।।
कुन्देन्दुशङ्खस्फटिकावभासो वेदाक्षमालावरदाभयाङ्कः
त्र्यक्षश्चतुर्वक्त्र उरूप्रभावः सद्योधितजातोऽवतु मां प्रतीच्याम्।।१४।।
वराक्षमालाभयढक्कहस्तः सरोजकिञ्जल्कसमानवर्णः।
त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः।।१५।।
वेदाभयेष्ठाङ्कुशपाशटङ्क्कपालढक्काक्षत्रिशूलपाणिः।
सितद्युतिः पञ्चमुखोऽवतान्मामीशान ऊर्ध्वं परमप्रकाशः।।१६।।
मूर्धानमव्यान्मम चन्द्रमौलिर्भालं ममाव्यादऽथ भालनेत्रः।
नेत्रे ममाव्यादभ्गनेत्रहारी नासां सदा रक्षतु विश्वनाथः।।१७।।
पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली।
वक्त्रं सदा रक्षतु पञ्चवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः।।१८।।
कण्ठं गिरीशोऽवतु नीलकण्ठः स्कन्दौ वृषस्कन्दगतः सदाव्यात्।
स्तनद्वयंपातु सदा महेशः पार्श्वद्वयं मे भगवान्गिरीशः।।१६।।
भुजद्वयं पातु भुजङ्गधारी पाणिद्वयं पातु पिनाकपाणिः।
दोर्मूलमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखान्तकोऽव्यात्।।२०।।
ममोदरं पातु गिरीन्द्रधन्वा मध्यं ममाव्यान्मदनान्तकारी।
हेरम्बतातो मम पातु नाभिं पायात्कटिं धूर्जटिरीश्वरो मे।।२१।।

गुह्यं हरो रक्षतु वासुकीशःपृष्टं ममाव्याद्गगनापगेशः।
ऊरुद्वयं पातुकुबेरमित्रो जानुद्वये मे जगदीश्वरोऽव्यात्।।२२।।
जङ्घाद्वयं पुङ्गवकेतुरव्यात्पादौ ममाव्यात्सुरवन्द्यपादः।
पायान्ममान्तःकरणं परात्मा सर्वाङ्गमव्यान्मम सर्वगुप्तः।।२३।।
महेश्वरः पातु दिनाद्ययामे मां मध्ययामेऽवतु वामदेवः।
त्रिलोचनः पातु तृतीययामे वृषध्वजः पातु दिनान्तयामे।।२४।।
पायान्निशादौ शशिशेखरो मां गङ्गाधरो रक्षतु मां निशीथे।
गौरीपतिः पातु निशावसाने मृत्युञ्जयो रक्षतु सर्वकालम्।।२५।।
अन्तःस्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु बहिःस्थितं माम्।
तदन्तरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समन्तात्।।२६।।
तिष्ठन्तमव्याद्भुवनैकनाथः पायादव्रजन्तं प्रमथाधिनाथः।
वेदान्तवेद्योऽवतु मां निषण्णं मामव्ययः पातु शिवः शयानम्।।२७।।
मार्गेषु मां रक्षतु नीलकण्ठः शैलादिदुर्गेषु पुरत्रयारिः।
अरण्यवासादिमहाप्रवासे पायान्मृगव्याधउदारशक्तिः।।२८।।
कल्पान्तकालोग्रपटुप्रकोपस्फुटाट्टहासोच्चलिताण्डकोशः।
घोरारिसेनार्णवदुर्निवारमहाभयाद्रक्षतु वीरभद्रः।।२९।।
पत्त्यश्वमातङ्गरथावरूथवत्सहस्त्रलक्षायुतकोटिभीषणम्।
अक्षौहिणीनां शतमाततायिनां छिन्द्यान्मृडो घोरकुठारधारया।।३०।।
निहन्तु दस्यून्प्रलयानलार्चिर्ज्वलत्त्रिशूलं त्रिपुरान्तकस्य।
शार्दूलसिंहर्क्षवृकादिहिंस्त्रान्सन्त्रासयत्वीशधनुः पिनाकः।।३१।।
दुःस्वन्पदुःशकुनदुर्गमदौर्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि।
उत्पातशापविषभीतिमऽसद्ग्रहार्तिं व्याधींश्च नाशयतु मे जगतामधीशः।।३२।।

ॐ नमो भगवते सदाशिवाय सकलतत्त्ववात्मकाय सर्वयन्त्राधिष्ठिताय सर्वतन्त्रस्वरूपाय सर्वमन्त्रस्वरूपाय सर्वतत्त्वविदुराय ब्रह्मरूद्रावतारिणे नीलकण्ठाय पार्वतीमनोहरप्रियाय सोमसूर्याग्निलो–

चनाय भस्मोद्धूलितविग्रहाय महामुकुटधारिणे माणिक्यभूषणाय सृष्टि-स्थितिप्रलयकालाग्निरूद्रावताराय दक्षाध्वरध्वंसकाय महाकालभेदनाय मूलाधारैकनिलयाय तत्त्वातीताय गङ्गाधराय सर्वदेवाधिदेवाय षडाश्रयाय वेदान्तसाराय त्रिवर्गसाधनाय अनेककोटिब्रह्मांण्डजनकाय अनन्तवासुकितक्षककार्कोटकषङ्खपालकुलिकपद्ममहापद्मेत्यष्टनाग-कुलभूषणाय प्रणवस्वरूपाय चिदाकाशाय आकाशदिक्स्वरूपाय सकलग्रहनक्षत्रमालिने सकलाय सकलकलङ्करहिताय सकललोकैककर्त्रे सकललोकैकभर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणे सकललोकैकवरप्रदाय सकलनिगमगुह्याय सकलवेदान्तपारगाय सकलदुरितार्तिभञ्जनाय सकलजगदभयङ्कराय सकललोकैकशङ्कराय शशाङ्कशेखराय शाश्वतनिजावासाय निर्गुणाय नीरूपाय निराभासाय निरामयाय निरातंकाय निष्प्रपञ्चाय निष्कलङ्काय निर्द्वन्द्वाय निःसङ्गाय निर्मलाय निर्गमाय निरूपमविभवाय निर्भयाय निर्लोभाय निष्क्रोधाय निश्चिन्ताय निरहंकाराय निराकुलाय निराधाराय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानन्दाय परमशान्तप्रकाशतेजोरूपाय तेजोमयाय जय जय रूद्र महारूद्रवीरभद्रावतार महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वाङ्गखड्गचर्मपाशंकुशडम-रुकशूलचापबाणगदाशक्तिभिण्डिपालतोमरमुसलमुद्गरप्रासपट्टिशपाशपरशु-परिघभुसण्डीशतघ्नीचक्राद्यायुधभीषणकर सहस्रमुख दंष्ट्राकराल-विकटाट्टहासविस्फारितब्रह्माणडमण्डल नागेन्द्रकुण्डल नागेन्द्रहारवलय नागेन्द्रचर्माम्बरधर मृत्युञ्जय त्र्यंबकत्रिपुरान्तक विरूपाक्ष विश्वेश्वर विश्वरूप वृषभवाहन विषभीषण विश्वतोमुख सर्वतो मां रक्ष रक्ष ज्वल ज्वल प्रज्वल २ महामृत्युभयं नाशय २ विषसर्पभयं शमय २ रोगभयमुत्सादय २ चोरभयं नाशय २ चोरान्मारय २ ममशत्रून् उच्चाटय २ त्रिशूलेन विदारय २ कुठारेण भिन्धि २ खड्गेन छिन्धि २ खट्वाङ्गेन विपोथय २ मुसुलेन निष्पेषय २ बाणैः सन्ताडय २ तृतीयनेत्रेण सन्तापय

२ रक्षांसि भीषय २ भूतान् विद्रावय २ कूष्माण्डवेतालभूतमारीब्रह्मराक्ष–सगणान् सन्त्रासय २ मामऽभयं कुरू २ वित्रस्तं मामश्वासय २ नरकमहाभयान्मामुद्धर २ संजीवय २ क्षुत्तृड्भ्यां मामाप्यायय २ दुःखातुरं मामानन्दय २ शिवकवचेन मामच्छादय २ मृत्युञ्जय त्र्यम्बकसदाशिव नमस्ते नमस्ते नमस्ते।।

ऋषभ उवाच।

इतीदं कवचं शैवं वरदंव्याहृतं मया।
सर्वबाधाप्रशमनं रहस्यं सर्वदेहिनाम्।।१।।
यः सदा धारयंन्मर्त्यः शैवं कवचमुत्तमम्।
न तस्य जायते क्वापि भयं शम्भोरनुग्रहात्।।२।।
क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपि वा।
सद्यः सुखमवाप्नोति दीर्घमायुश्च विन्दति।।३।।
सर्वदारिद्र्यशमनं सर्वमङ्गल्यवर्धनम्।
यो धत्ते कवचं शैवं स देवैरपि पूज्यते।।४।।
महापातकसंघातैर्मुच्यते चोपजपातकैः।
देहान्ते मुक्तिमाप्नोति शिववर्मानुभावतः।।५।।
त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम्।
धारयस्व मया घत्तंसद्यः श्रेयो ह्यऽवाप्स्यसि।।६।।

इति श्रीस्कन्दपुराणे शिवकवचं सम्पूर्णम्।।

# ।। अथ भ्राह्मीविद्या ।।

ॐ ॐ ॐ त्रिगुणपुरूष क्षेत्रचर मोहं भिन्धि रजस्तमसी भिन्धि प्राकृतपाशजालं सावरणं परिहर सत्वं गृहाण पुरूषोत्तमोसि सोमसूर्यानलप्रवरपरमधामन् ब्रह्मविष्णुमहेश्वरस्वरूप सृष्टिम्थितिसंहारकारक भ्रूमध्यनिलय तेजोसि धामासि अमृतात्मन् ॐतत्सत् हँसः शुचिषत् वसुरन्त रिंक्षसत्होतावेदिषत् अतिथिर्दुरोणसत् । नृषद्वरसत्ऋतसद्व्योमसदअब्जा गोजा ऋृतजा अद्रिजा ऋृतं परंब्रह्मस्वरूप सर्वगत सर्वशक्ते सर्वेश्वर सर्वेन्द्रियग्रन्थिभेदं कुरू परमं पदं परामर्शय परमार्ग ब्रह्मद्वारं सर कुमार्गं जहि षट्कोशिकं शरीरं त्यज शुद्धोसि बुद्धोसि विमलोसि क्षमस्व स्वपदमाऽस्वादय स्वाहा ।।

ॐ भूर्भुवः स्वः तत् सवितुर् वरेण्यं
भर्गो देवस्य धीमहि धियो
यो नः प्रचोदयात् ।।



# ।। अथ गौरीस्तुतिः।।

ॐ लीलारब्धस्थापितलुप्ताखिललोकां।
लोकातीतैर्योगिभिरऽन्तर्हृदिमृग्याम।
बालादित्यश्रेणिसमानद्युतिपुञ्जां
गौरीमऽम्बामऽम्बुरहाक्षीमऽहमीडये ।।१।।
आशापाशक्लेशविनाशं विदधानां।
पादाम्भोजध्यानपराणां पुरुषाणाम्।
ईशीमीशांग्ार्धहरां तां तनुमधयां ।। गौरी० ।२।
प्रत्याहारध्यानसमाधिस्थितिभाजां
नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम्।
सत्यज्ञानानन्दमयीं तां तडिदाभां ।। गौरी० ।३।
चन्द्रापीडानन्दितमन्दस्मितवक्त्रां
चन्द्रापीडालङ्कृतलोलालकभाराम्।
इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां ।। गौरी० ।४।
नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडति यासौ स्वयमेका।
कल्याणीं तां कल्पलतामानतिभाजां ।। गौरी० ।५।
मूलाधारादुत्थितवन्तीं विधिरन्ध्रं
सौरं चान्द्रं धाम विहाय ज्वलिताङगीम्।
स्थूलां सूक्ष्मां सूक्ष्मतरां तामऽभिवन्द्यां ।। गौरी० ।६।
आदिक्षान्तामक्षरमूर्त्या विलसन्तीं
भूते भूते भूतकदम्बं प्रसवित्रीम्।
शब्दब्रह्मानन्दमयीं तामभिरामां ।। गौरी० ।७।
यस्याः कुक्षौ लीनमखण्डं जगदण्डं

भूयो भूयः प्रादुरभूदक्षतमेव।
भर्त्रा सार्धं तां स्फटिकाद्रौ विहरन्तीं ।। गौरी० ।८।
यस्यामेतत्प्रोतमशेषं मणिमाला
सूत्रे यद्वत्क्वापि चरं चाप्यचरं च।
तामध्यात्मज्ञानपदव्या गमनीयां ।। गौरी० ।९।
नित्यः सत्यो निष्कल एको जगदीशः
साक्षी यस्याः सर्गविधौ संहरणे च।
विश्वत्राणक्रीडनशीलां शिवपत्नीं ।। गौरी० ।१०।
प्रातः काले भावविशुद्धिं विदधानो
भक्तया नित्यं जल्पति गौरीदशकं यः।
वाचां सिद्धिंसम्पत्तिमुच्चैः शिवभक्तिं
तस्यावश्यं पर्वतपुत्री विदधाति ।। गौरी० ।११।

The three worlds "Bhur", "Bhuvar" and "Suar" denoting the three worlds are called vyahritis

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः
लक्ष्मीस्तोयतरङ्ग — भङ्ग चपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना



I am getting older every day. The bygone days will not come back. Time devours the whole world. Wealth and life itself are transitory. Therefore Oh Lord, save me, here and now, I have surrendered my self to you

